कुडि वैकल्ये । कुण्डति । कुण्डत इति तु दाहे गतम् । ३७ ॥ मुड प्रुड मर्दने । ३८॥ चुडि अल्पीभावे । ३९ ॥ मुडि खण्डने । मुण्डति । ४० ॥ पुडि चेत्येके । पुण्डति । ४१ ॥ रुटि लुटि स्तेये । रुण्टति । ४२ ॥ लुण्टति । ४३ ॥ रुठि ॥ ४४ लुठि इत्येके । ४५ ॥ रुडि ४६ लुडीत्यपरे । ४७ ॥ स्फुटिर् विशरणे । इरित्त्वादङ्वा । अस्फुटत् । अस्फोटीत् । ४८ ॥ स्फुटीत्यपि केचित् । इदित्त्वान्नुम् । स्फुण्टति । ४९ ॥ पठ व्यक्तायां वाचि । पेठतुः । पेठिथ । अपठीत् । अपाठीत् । ५० ॥ वठ स्थौल्ये । ववठतुः । ववठिथ । ५१ ॥ मठ मदनिवासयोः । ५२ ॥ कठ कृच्छ्रजीवने । ५३ ॥ रट परिभाषणे । ५४ । रठेत्येके । ५५ ॥ हठ प्लुतिशठत्वयोः । बलात्कारे इत्येके । हठति । जहाठ । ५६ ॥ रुठ ५७ लुठ ५८ उठ उपघाते । ओठति । ५९ ॥ ऊठेत्येके । ऊठति । ऊठांचकार । ६० ॥ पिठ हिंसासंक्लेशनयोः । ६१ ॥ शठ कैतवे च । ६२ ॥ शुठ प्रतिघाते । शोठति । ६३ ॥ शुठीति स्वामी । शुण्ठति ६४ ॥ कुठि च । कुण्ठति । ६५ ॥ लुठि आलस्ये प्रतिघाते च । ६६ ॥ शुठि शोषणे । ६७ । रुठि ६८ लुठि गतौ । ६९ ॥ चुड्ड भावकरणे । भावकरणमभिप्रायसूचनम् । चुड्डति । चुचुड्ड । ७० ॥ अड्ड अभियोगे । अड्डति । आनड्ड । ७१ ॥ कड्ड कार्कश्ये । कड्डति । ७२ ॥ चुड्डादयस्त्रयो दोपधाः तेन क्विपि चुत् अत् कत् इत्यादि ॥ क्रीडृ विहारे । चिक्रीड । ७३ ॥ तुडृ तोडने । तोडति । तुतोड । ७४ ॥ तूड इत्येके । ७५ ॥ हुडृ ७६ हूडृ ७७ होडृ ७८ गतौ । हुड्यात् । हूड्यात् । होड्यात्॥ रौडृ अनादरे । ७९ ॥ रोडृ ८० लोडृ उन्मादे । ८१ ॥ अड उद्यमे । अडति । आड । आडतुः । आडुः । ८२ ॥ लड विलासे । लडति । ८३ । डलयोरेकत्वस्मरणाल्लतीति स्वाम्यादयः ॥ कड मदे । कडति । ८४ । कडि इत्येके । कण्डति । ८५ । गडि वदनैकदेशे । गण्डति । ८६ । इति टवर्गीयान्ताः ॥ अथ पवर्गीयान्ताः । तत्रानुदात्तेतः स्तोभत्यन्ताश्चतुस्त्रिंशत् । तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः । आद्योऽनुदात्तः । क्षीरस्वामी त्वयं सेडिति बभ्राम । तेपते । तितिपे । क्रादिनियमादिट् । तितिपिषे । तेप्ता । तेप्स्यते ॥ लिङ्सिचावात्मनेपदेषु । १ । २ । ११॥ इक्समीपाद्धलः परौ झलादी लिङ् आत्मनेपदपरः सिच्चेत्येतौ कितौ स्तः । कित्त्वान्न गुणः । । तिप्सीष्ट । तिप्सीयास्ताम् । तिप्सीरन् । लुङि झलो झलीति सलोपः । अतिप्त । अतिप्साताम् । अतिप्सत । १ ॥ तेपते । तितेपे । २ ॥ तिष्टिपे । तिष्टिपाते । तिष्टिपिरे ३ । तिष्टेपे ।

---

वृद्धिगुणयोः स्थानिवद्भावेन ‘ असवर्णे ’ इति प्रतिषेधादिति चेत् ॥ मैवम् । असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याप्रवृत्तेः । ननु नास्ति सामर्थ्यम् इयर्ति इयृत इत्यादौ सावकाशत्वादिति चेद् ॥ अत्राहुः । ‘ न ह्येकमुदाहरणं योगारम्भं प्रयोजयति ’ । अन्यथा हि ‘ अभ्यासस्यार्त्तौ ’ इति ब्रूयात् ॥ एवं चान्तरङ्गत्वात्सवर्णदीर्घे कृते ततो वृद्धिगुणयोः सतोः णलि आय थलि एथ । इट्पक्षे तु अयिथेति स्यादित्याशङ्कापि न कार्या । ‘ अभ्यासस्यासवर्णे ’ इत्यस्य वैयर्थ्यापत्तेरिति ॥ एता । एष्यति ‘ अकृत्सार्व– ’ इति दीर्घः । ईयात् । ऐषीत् ॥ कुडि । वैकल्यमविवेकः । तुडृ । तोडनं दारणं हिंसनं च ॥ रोडृ लोडृ । उन्मादश्चित्तविभ्रमः॥ गडि वदनैकदेशे । टवर्गीयप्रकरणादिह पाठस्तु उचितः । अन्तत्यादिषु तु ‘ पञ्चैते न तिङ्विषया ’ इति मतान्तरं बोधयितुं प्रसङ्गादुपन्यस्तम् ॥ तिपृ तेपृ ॥ लिङ्सिचावात्मनेपदेषु ॥ ‘ इको झल् ’ ‘ हलन्ताच्च ’ इति वर्तते ‘ असंयोगाल्लिट् कित्– ’ इत्यतः किदिति च । तदाह इक्समीपादित्यादि ॥ इकः किम् । यक्षीष्ट । सति कित्त्वे संप्रसारणं स्यात् ॥ आत्मनेपदेति किम् । अद्राक्षीत् । कित्त्वे सति

तिष्टेपाते । तिष्टेपिरे ॥ तेपृ कम्पने च । ४ ॥ ग्लेपृ दैन्ये । ग्लेपते ५ ॥ टुवेपृ कम्पने । वेपते । ६॥ केपृ ७ गेपृ ८ ग्लेपृ च । चात्कम्पने गतौ च । सूत्रविभागादिति स्वामी। मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षत इत्याह । ग्लेपेरर्थभेदात्पुनः पाठः । ९ ॥ मेपृ १० रेपृ ११ लेपृ १२ गतौ ॥ त्रपूष् लज्जायाम् । त्रपते ॥ तॄफल भजत्रपश्च । ६ । ४ । १२२ ॥ एषामत एकारोऽभ्यासलोपश्च स्यात्किति लिटि सेटि थलि च । त्रेपे । त्रेपाते । त्रेपिरे । ऊदित्त्वादिड्वा । त्रपिता । त्रप्ता । त्रपिषीष्ट । त्रप्सीष्ट । १३ ॥ कपि चलने । कम्पते । चकम्पे । १४ ॥ रबि १५ लबि १६ अबि शब्दे । ररम्बे । ललम्बे । आनम्बे॥ लबि अवस्रंसने च । १७॥ कबृ वर्णे । चकबे । १८ ॥ क्लीबृ अधाष्टर्ये । चिक्लीबे । १९ ॥ क्षीबृ मदे । क्षीबते २० ॥ शीभृ कत्थने । शीभते । २१ ॥ चीभृ च । २२ ॥ रेभृ शब्दे । रिरेभे । २३ ॥ अभिरभी क्वचित्पठ्येते । अम्भते । २४ । रम्भते । २५ ॥ ष्टभि २६ स्कभि प्रतिबन्धे । स्तम्भते । उत्तम्भते । उदः स्थास्तम्भोरिति पूर्वसवर्णः । विस्तम्भते । स्तन्भेरिति षत्वं तु न भवति । श्रुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात् । तद्बीजं तु उदःस्थास्तम्भोरिति पवर्गीयोपधपाठः स्तन्भेरिति तवर्गीयोपधपाठश्चेति माधवः । केचिदस्य टकार औपदेशिक इत्याहुः । तन्मते ष्टम्भते । टष्टम्भे ॥ २७ ॥ जभी जृभि गात्रविनामे ॥ रधिजभोरचि । ७ । १ । ६१ ॥ एतयोर्नुमागमः स्यादचि । जम्भते । जजम्भे । जम्भिता । अजम्भिष्ट । २८ । जृम्भते । जजृम्भे । २९ ॥ शल्भ कत्थने । शशल्भे । ३० ॥ वल्भ भोजने । दन्तोष्ठ्यादिः । ववल्भे ॥ ३१ ॥ गल्भ धाष्टर्ये । गल्भते ३२ ॥ श्रम्भु प्रमादे । तालव्यादिर्दन्त्यादिश्च । श्रम्भते । स्रम्भते ॥ ३३॥ ष्टुभु स्तम्भे । स्तोभते । विष्टोभते । तुष्टुभे । व्यष्टोभिष्ट।३४॥ अथ परस्मैपदिनः ॥ गुपू रक्षणे ॥ गुपूधूपविच्छिपणिपनिभ्य आयः । ३ । १ । २८॥ एभ्य आयप्रत्ययः स्यात्स्वार्थे। पुगन्तेति गुणः ॥ सनाद्यन्ता धातवः । ३।१।३२॥ सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः । धातुत्वाल्लडादयः ।

---

'ह्रजिद्दशोर्झल्यमकिति'इत्यम् न स्यात्। आत्मनेपदपरत्वं सिच एव विशेषणम् न तु लिङः, लिङ्स्थानिकस्यात्मनेपदस्य लिङः परत्वासंभवात् ॥ **तेपृ कम्पने च** । चकारात्क्षरणार्थस्य लाभादस्य पूर्वत्र पाठस्त्यक्तुं शक्यः । केचित्तु **तिपृ देपृ** इति पठन्ति ॥ टुवेपृ । वेपथुः ॥ **केपृ गेपृ ग्लेपृ च** । योगविभागात्पूर्वोत्तरार्थौ चकारेणानुकृष्येते । तदाह—**चात्कम्पने गतौ चेति** । योगविभागसामर्थ्यादेव अर्थद्वयलाभे चकारो व्यर्थ इत्यन्ये ॥ **पुनः पाठ इति** । दैन्ये पठितस्य कम्पनाद्यर्थलाभार्थमिति भावः ॥ **तॄफल** ॥ तरतेरकारस्य गुणशब्देन भावितत्वात्फलभजोर्वैरूप्यसंपादकादेशादित्वात् त्रपतेस्त्वेकहल्मध्यस्थत्वाभावादप्राप्ते विधिरयम् ॥ तेरतुः । तेरुः । फेलतुः । फेलुः । भेजतुः । भेजुः॥ **अबि शब्दे** । अस्माद्'गुरोश्च हल'इति अप्रत्यये अम्बाशब्दः। तिस्रः अम्बा अकारोकारमकारात्मकाः शब्दा यस्य इति बहुव्रीहौ 'शेषाद्विभाषा'इति कप्रत्यये त्र्यम्बक इत्येके॥ केचित्तु त्रीणि अम्बकानि नेत्राणि यस्येति विगृह्णन्ति ॥ **अभिरभी इति**। 'सर्वधातुभ्योऽसुन्' इत्यधिकारे 'उदके नुम्भौ च' इति वक्ष्यमाणत्वाद् धात्वन्तरेणापि अम्भःशब्दः सिध्यतीति बोध्यम् । अम्भस्तोयम् । तस्यापत्यमाम्भिः भीष्मः । 'अम्भसो लोपश्च' इति बाह्वादिपाठादिञि सलोपः । **तद्बीजं तु इति** । पूर्वसवर्णप्रवृत्तेः षत्वाप्रवृत्तेश्च बीजमित्यर्थः ॥ **रधिजभोरचि** ॥ रन्धयति । परापि वृद्धिर्नित्येन नुमा बाध्यते ॥ अचीति किम् । रद्धा । जब्धा ॥ **सनाद्यन्ताः** ॥ **सनादय इति** ॥ सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्किप् णिज्यङौ तथा ॥ यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥ **धातुत्वादिति** । प्रत्ययविशिष्टस्य धातुत्वादित्यर्थः । 'सुप्तिङन्तम्' इत्यनेन 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापितत्वाद्विशिष्टस्य धातुसंज्ञाल-

गोपायति ॥ **आयादय आर्धधातुके वा ३ । १ । ३१** ॥ आर्धधातुकविवक्षायामायादयो वा स्युः ॥ **कास्प्रत्ययादाममन्त्रे लिटि । ३ । १ । ३५** ॥ कास्धातोः प्रत्ययान्तेभ्यश्चाम् स्याल्लिटि न तु मन्त्रे ॥*॥ कास्यनेकाज्ग्रहणं कर्तव्यम् ॥*॥ सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः ॥ **आर्धधातुके । ६ । ४ । ४६** ॥ इत्यधिकृत्य ॥ **अतो लोपः । ६ । ४ । ४८** ॥ आर्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे गोपायाञ्चकार । गोपायाम्बभूव । गोपायामास । जुगोप । जुगुपतुः । ऊदित्वाद्वेट् । जुगोपिथ । जुगोप्थ । गोपायिता । गोपिता । गोप्ता । गोपाय्यात् । गुप्यात् । अगोपायीत् । अगोपीत् । अगौप्सीत् ॥ १ ॥ धूप सन्तापे । धूपायति । धूपायाञ्चकार । दुधूप । धूपायितासि । धूपितासि । जप २ जल्प ३ व्यक्तायां वाचि ॥ जप मानसे च । ४ ॥ चप सांत्वे । ५ ॥ षप समवाये । समवायः सम्बन्धः सम्यगवबोधो वा । सपति । ६ ॥ रप ७ लप व्यक्तायां वाचि । ८ ॥ चुप मन्दायां गतौ । चोपति । चुचोप । चोपिता ॥ ९ ॥ तुप १० तुम्प ११ त्रुप १२ त्रुम्प १३ तुफ १४ तुम्फ १५ त्रुफ १६ त्रुम्फ हिंसार्थाः । तोपति । तुतोप । तुम्पति । तुतुम्प । तुतुम्पतुः । संयोगात्परस्य लिटः कित्त्वाभावान्नलोपो न । किदाशिषीति कित्त्वान्नलोपः । तुप्यात् । प्रात्तुम्पतौ गवि कर्तरीति पारस्करादिगणे पाठात्सुट् । प्रस्तुम्पति गौः । श्तिपा निर्देशाद्यङ्लुकि न । प्रतौतुम्पीति । त्रोपति त्रुम्पति । तोफति । तुम्फति । त्रोफति । त्रुम्फति । इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः अन्ये सरेफाः आद्याश्चत्वारः प्रथमान्ताः ततो द्वितीयान्ताः अष्टावप्युकारवन्तः । १७ ॥ पर्प १८ रफ १९ रफि २० अर्ब २१ पर्ब २२ लर्ब २३ बर्ब २४ मर्ब २५ कर्ब २६ खर्ब २७ गर्ब २८ शर्ब २९ षर्ब ३० चर्ब गतौ । आद्यः प्रथमान्तः ततो द्वौ द्वितीयान्तौ तत एकादश तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः । पर्पति । पपर्प । रफति । रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्ब-

---

भाय अस्मिन् सूत्रे अन्तग्रहणं कृतम् । ' भूवादयो धातवः ' इत्यस्यानन्तरं ' सनाद्यन्ताश्च ' इति न सूत्रितम् । ' सनादयो द्वादश एव ' इति निर्धारणाभावापत्तेः । ' सनाद्यन्ता धातवः ' इत्यस्यानन्तरं तु ' भूवादयश्च ' इति पठित्वा धातव इत्येतत्तत्र त्यक्तुं शक्यम् ॥ **आयादयः** ॥ आयेयङ्णिङ इत्यर्थः । विवक्षायामिति । परसप्तम्यां तु 'आर्धधातुकोपदेशकाले यदन्तम् ' इत्युपदं वक्ष्यमाणं न संगच्छेतेति भावः ॥ अन्ये तु ' गुपू रक्षणे' इत्यस्मात् क्तिनि पश्चादायप्रत्यये गोपायतिरित्यनिष्टं प्रसज्येत । विवक्षायामित्युक्ते तु आयप्रत्यये कृते क्तिनं बाधित्वा ' अप्रत्ययात् ' इत्यकारप्रत्यये टापि च गोपाया धूपायेति सिध्यतीत्याहुः ॥ **कास्प्रत्यया** ॥ अमन्त्रे किम्—कृष्णो नोनाव ॥ ' अच्छन्दसि ' इति तु नोक्तम् । मन्त्रभिन्ने छन्दसि आम इष्टत्वात् । यथा ' पुत्रमामन्त्रयामास ' । प्रत्ययान्तत्वादाम् । ' अथाह शुनःशेप ईक्षांचक्रे ' । ' इजादेश्च ' इत्याम्॥ इह चुलुम्पचकास्दरिद्रादिभ्य आमो अप्राप्तौ 'कास्यनेकाच्' इति वार्तिकमारभ्यते ॥ **प्रत्ययग्रहणमपनीयेति** । अन्यथा ' अ इव आचरति अति अस्य लिटि औ अतुः ' इत्यादि वक्ष्यमाणं न सिध्येदिति भावः ॥ अन्ये तु भाष्यवार्तिकयोः ' प्रत्ययग्रहणमपनीय ' इत्यनुक्त्या प्रत्ययान्तादेकाचोऽप्याम् भवत्येव । अ इवाचरति इत्याचारे क्विपि लिटि आंचकार, आंचक्रतुरित्यादीत्यहुः ॥ **अतो लोपः** ॥ ' अनुदात्तोपदेश ' इति सूत्रादुपदेश इत्यनुवर्तते । तदाह—**आर्धधातुकोपदेशे इत्यादि** ॥ उपदेशे इति किम् ॥ **अय पय गतौ** । आभ्यां क्विपि 'वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन ' इति वार्तिकात् 'लोपो व्योः' इति यलोपे ' अतो लोपः ' इति लोपो माभूत् । अत् यत् । इह ' ह्रस्वस्य पिति ' इति तुक् ॥ आर्धधातुके परं इति किम् । कथयति । वृद्धौ कर्तव्यायाम् ' अचः परस्मिन् ' इति स्थानिवत्त्वं यथा स्यात् ॥**गोपायामिति**॥ नन्विह आयप्रत्ययस्यादन्ततामाश्रित्य लोपकरणे फलाभावादुच्चारणार्थ एव तत्राकारोऽस्त्विति चेत् ॥ अत्राहुः । ' गोपायतं न ' इत्यत्र

ति । पवर्गीयादिरयम् । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति । चर्बति । ३१ ॥ कुबि आच्छादने । कुम्बति । ३२ ॥ लुबि ३३ तुबि अर्दने । लुम्बति । तुम्बति । ३४॥ चुबि वक्त्रसंयोगे । चुंबति ३५॥ षृभु षृम्भु हिंसार्थौ । सर्भति । ससर्भ । सर्भिता । ३६ ॥ सृम्भति । ससृम्भ । सृम्भ्यात् । ३७ ॥ षिभु ३८ षिम्भु इत्येके । सेभति । सिम्भति ॥ ३९ ॥ शुभ ४० शुम्भ भाषणे । भासने इत्येके । हिंसायामित्यन्ये ॥ ४१ ॥ अथानुनासिकान्ताः । तत्र कम्यन्ता अनुदात्तेतो दश घिणि घुणि घृणि ग्रहणे।नुम् ष्टुत्वम् घिण्णते । जिघिण्णे॥१।घुण्णते जुघुण्णे ॥२।घृण्णते जघृण्णे ॥३॥ घुण ४ घूर्ण भ्रमणे। घोणते।घूर्णते । इमौ तुदादौ परस्मैपदिनौ । ५ ॥ पण व्यवहारे स्तुतौ च ॥ पन च ॥ स्तुतावित्येव सम्बध्यते पृथङ्निर्देशात् । पनिसाहचर्यात्पणेरपि स्तुतवेवायप्रत्ययः । व्यवहारे तु पणते । पेणे । पणितेत्यादि । स्तुतावनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । पणायति । पणायाञ्चकार । पेणे । पणायितासि । पणितासे । पणाय्यात् । पणिषीष्ट । ६ । पनायति । पनायाञ्चकार । पेने । ७॥ भाम क्रोधे । भामते । बभामे । ८ ॥ क्षमूष् सहने । क्षमते । क्षचमिषे । चक्षंसे । चक्षमिध्वे । चक्षमिवहे ॥ **म्वोश्च । ८ । २ । ६५ ॥** मान्तस्य धातोर्मस्य नकारादेशः स्यान्मकारे वकारे च परे । णत्वम् । चक्षण्वहे । चक्षमिमहे । चक्षण्महे । क्षमिष्यते । क्षंस्यते । क्षमेत । आशिषि । क्षमिषीष्ट । क्षंसीष्ट । अक्षमिष्ट । अक्षंस्त ॥ ९ ॥ कमु कान्तौ । कान्तिरिच्छा ॥ **कमेर्णिङ् । ३ । १ । ३० ॥** स्वार्थे । ङित्वात्तङ् । कामयते ॥ **अयामन्ताल्वाय्येत्न्विष्णुषु । ६ । ४ । ५५ ॥** आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । वक्ष्यमाणलोपापवादः । कामयाञ्चक्रे । आयादय आर्द्धधातुके वा । चकमे । कामयिता । कमिता । कामयिष्यते । कमिष्यते ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ् । ३ । १ । ४८ ॥** ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात्कर्त्रर्थे लुङि परे । काम्इअतेति स्थिते । **णेरनिटि । ६ । ४ ।५१ ॥** अनिडादावार्धधातुके परे णेर्लोपः स्यात् ।

---

गोपायशब्दस्य धातुत्वात् धातोरन्त उदात्तो भवति, ततः शबकारेणैकादेशोपि'एकादेश उदात्तेन'इत्युदात्त एव, तकाराकारस्तु 'तास्यनुदात्तेन्ङिददुपदेशात्' इत्यनुदात्तः । ततश्च 'उदात्तादनुदात्तस्य' इति स्वरितो भवति । 'स्वरितात्संहितायामनुदात्तानाम्' इति न इत्यस्य एकश्रुतिः । आयप्रत्ययस्य अनदन्तत्वे नेदमिष्टं सिध्यतीति ॥ स्तुतावेवेति । भट्टिस्तु व्यवहारेपि प्रायुङ्क्त 'न चोपलेभे वणिजां पणायाम्' इति ॥ वणिजां व्यवहारमित्यर्थः । 'अप्रत्ययात्' इति आयप्रत्ययान्तादकारप्रत्यये टाप् । **चक्षंसे इति** । इह 'अनुनासिकस्य क्विझलोः' इति उपधादीर्घो न कृतः। संज्ञापूर्वकविधेरनित्यत्वादिति स्थितस्य गतिमुत्प्रेक्षयन्ति ॥ **कमु कान्तौ** ॥ अस्य णिङभावे 'उदितो वा' इति क्त्वायामिड्विकल्पः । कमित्वा । कान्त्वा । निष्ठायां तु 'यस्य विभाषा' इति निषेधात्कान्तः ॥ **अयामन्ता** ॥ 'नामन्त' इति सूत्रितेपि 'णेरनिटि' इति वक्ष्यमाणलोपस्य निषेधे गुणायादेशयोः सतोः कामयांचक्रे इत्यादिरूपाणि सिध्यन्त्येव । तथापि 'ल्यपि लघुपूर्वात्' इत्येवमर्थमायादेशवचनम् । प्रस्तनय्य । संगमय्य । न ह्यत्र गुणायादेशौ लभ्येते ॥ आम्—कारयामास ॥ अन्त—गण्डयन्तो मण्डयन्तः । 'तृभूवहिवसिसाधिगडिमडिजिन्दिभ्यश्च' इत्यौणादिको झच् । 'झोऽन्तः' ॥ 'स्पृहिगृहि—' इत्यालुच् । स्पृहयालुः ॥ 'श्रुदक्षिस्पृहिगृहिभ्यः' इत्यौणादिक आय्यः । स्पृहयाय्यः । 'स्तनिहृषिपुषि—' इत्यौणादिक इत्नुच् । स्तनयित्नुः ॥ 'णेश्छन्दसि' इति इष्णुच् । वीरुधः पारयिष्णवः ॥ **णिश्रिद्रु** ॥ च्लेः सिचोपवादः ॥ **णेरनिटि** ॥ णेरिति णिङ्णिचोर्ग्रहणम् ॥ एवमन्यत्रापि बोध्यम् । 'अनिटि' इत्यनेनाधिकृतम् 'आर्धधातुके' इत्येतद्विशेष्यते । 'यस्मिन्विधिः'

परत्वादेरनेकाच इति यणि प्राप्ते॥ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति वार्तिकम् ॥*॥ णिलोपस्य तु पाचयतेः पाक्तिरित्यादि क्तिजन्तमवकाश इति भावः । वस्तुतस्त्वनिटीतिवचनसामर्थ्यादार्धधातुकमात्रमस्य विषयः तथा चेयङादेरपवाद एवायम् । इयङ्, अततक्षत्। यण्, आटिटत्। गुणः, कारणा । वृद्धिः,कारकः । दीर्घः, कार्यते॥ **णौचङ्युपधाया ह्रस्वः।७।४।१॥** चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ **चङि । ७ । १ । ११ ॥** चङि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे । ७।४। ९३ ॥** चङ्परे इति बहुव्रीहिः। स चाङ्गस्येति च द्वयमप्यावर्तते अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरिति यावत्, तत्परं यल्लघु तत्परो योऽङ्गस्याऽभ्यासस्तस्य सनीव कार्यं स्यात् नाग्लोपेऽसति।अथवाङ्गस्येति नावर्तते।चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्येत्यादि प्राग्वत्॥**सन्यतः।७।४।७९॥**अभ्यासस्यात इकारः स्यात्सनि॥**दीर्घो लघोः।७। ४ । ९४ ॥** लघोरभ्यासस्य दीर्घः स्यात्सन्वद्भावविषये । अचीकमत । णिङभावपक्षे॥

---

इति तदादिविधिः । 'अतो लोपः' इत्यस्माल्लोप इति चानुवर्तते तदाह । **अनिडादावित्यादि ॥ यणि प्राप्त इति ॥** ननु परत्वादियङ्यणादिविधयो यथासंभवमत्र सन्तु नाम, तेषु स्थानिवद्भावाण्णिग्रहणेन ग्रहणाल्लोपो भविष्यतीति चेत् । नैव शङ्क्यम् । इयङादेशे ह्यन्त्यलोपः प्रसज्येतेति दोषः स्यात् । एतच्च 'अतो लोपः' इति सूत्रे भाष्ये स्थितम् ॥ न चात्र कारणा कारक इत्यादौ गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयायादेशयोः कृतयोरन्त्यस्य लोपः प्राप्नोतीति कथमियङादेशे एव दोष उक्त इति शङ्क्यम् । 'वार्णादाङ्गं बलीयः' इत्ययायौ बाधित्वा णिलोपो भविष्यतीति भाष्याशयात् ॥ **ण्यल्लोपाविति** । णिलोप इयङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन । अल्लोपस्तु वृद्धिदीर्घाभ्यामिति विवेकः ॥ णिलोपस्य निरवकाशत्वेन वार्तिकस्योक्तिसंभव एव नास्तीत्यत आह–**पाक्तिरित्यादि क्तिजन्तमिति** । तत्र 'तितुत्र–' इतीण्निषेधादिति भावः । **वचनसामर्थ्यादिति** ॥ अयं भावः–णेः' इत्येतावति सूत्रे कृतेऽपि 'आर्द्धधातुके' इत्यनुवृत्त्या आर्धधातुके परतः प्रवर्तमानो णिलोप इयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिच्येव स्यादिति 'अनिटि' इत्यस्य वैयर्थ्यं प्रसज्येत । तथा चानिडार्धधातुकं सर्वमप्यस्य विषयो न तु क्तिजन्तमेवेति ॥ **अयमिति** ॥ णिलोप इत्यर्थः । अलोपांशे तु वचनमपेक्षितमेव । तेन चिकीर्षक इत्यत्र वृद्धिः चिकीर्ष्यादित्यत्र 'अकृत्सार्व–' इति दीर्घं बाधित्वा पूर्वविप्रतिषेधेन 'अतो लोपः' इति लोपो भवतीत्याह ॥ **णौ चङ्युपधाया ह्रस्वः** ॥ उपधायाः किम् । अचकाङ्क्षीत् ॥ **सन्वल्लघुनि** ॥ 'चङ्परे' इत्येतावतैव णिरिति न लभ्यते । श्रिद्रुस्रुवामपि चङ्परत्वादत आह । **अङ्गसंज्ञानिमित्तमिति ॥ अङ्गस्याभ्यास** इति । 'अङ्गस्य ये द्वे विहिते तयोः पूर्वोऽभ्यास' इत्यर्थः ॥ **अङ्गस्येति नावर्ततइति** । अस्मिंस्तु व्याख्याने 'चङ्परे' इत्येतावतैव णिरिति लभ्यते । श्रिद्रुस्रुषु परेषुं अङ्गत्वासंभवादतो व्याचष्टे–**चङ्परे णौ यदङ्गमिति** । 'चङ्परे' इत्यस्यैव व्याख्यानं णाविति ज्ञेयम् ॥ **अनग्लोपे किम्** । 'अचकथत् ॥ **सन्यतः** ॥ 'अत्र लोपोऽभ्यासस्य' इत्यतः 'अभ्यासस्य' इति, 'भृञामित्' इत्यत इद्ग्रहणं चानुवर्तते तदाह । **अभ्यासस्येत्यादि** ॥ तपरकरणं किम् । पापच्यते सन् । पापचिषते ॥ न च 'सनि योऽभ्यासः सन्निमित्तः' इति विज्ञानात्तपरकरणाभावेपि नोक्तातिप्रसङ्गः । अभ्यासस्येह यन्निमित्तत्वादिति वाच्यम् । तादृशविवक्षायामधीषिषति प्रतीषिषतीत्यादावव्याप्तेः ॥ न हि कार्यी निमित्तत्वेनाश्रीयते । यद्याश्रीयेत तर्हि 'द्विर्वचनेचि' इति निषेधेन रिस्शब्दस्य द्वित्वाप्रवृत्तावरिरिषतीत्यादि न सिध्येत् ॥ नन्वेवं पिपक्षतीत्यादावव्याप्तिरभ्यासस्य सन्परत्वाभावात् । न च 'येन नाव्यवधानन्यायेन सन्प्रवृत्त्या व्यत्रहितेप्यभ्यासस्येत्वं स्यादेवेति वाच्यम् । प्रतीषषतीत्यादावभ्यासस्याव्यवहितसन्परत्वसंभवादुक्तन्यायप्रवृत्तेरिति चेत् ॥ अत्राहुः । सना धातुमाक्षिप्य 'सनि यो धातुः सन्नन्तस्तदीयाभ्यासस्य' इति व्याख्याने नोक्तदोषः । न च 'सनि परे अभ्यासस्य' इति यथाश्रुतं परित्यज्योक्तव्याख्याने किं मानमिति वाच्यम् । तपरकरणस्यैव तत्र मानत्वात् । किं च अकारग्रहणमपि तत्र मानम् । अन्यथा सनीत्येव ब्रूयात् । तावताप्यधीषिषतीत्यादावित्वप्रवृत्तिसिद्धेरिति ॥ **दीर्घो लघोः ॥ लघोरभ्यासस्येति** ॥ ननु अज्झलसमुदायस्याभ्यासस्य लघुसंज्ञा दुर्लभा

**कमेश्चलेश्चङ्क्तव्यः ॥ * ॥ णेरभावान्न दीर्घसन्वद्भावौ । अचकमत । १० ॥ संज्ञायाः कार्यकालत्वादङ्गं यत्र द्विरुच्यते ॥ तत्रैव दीर्घः सन्वच्च नानेकाश्चिवति माधवः ॥ १ ॥ चकास्त्यर्थापयत्यूर्णोत्यादौ नाङ्गं द्विरुच्यते ॥ किं त्वस्यावयवः कश्चित्तस्मादेकाश्चिवदं द्वयम् ॥ २ ॥ वस्तुतोऽङ्गस्याऽवयवो योऽभ्यास इति वर्णनात् । ऊर्णौ दीर्घोऽर्थापयतौ द्वयं स्यादिति मन्महे ॥ ३ ॥ चकास्तौ तूभयमिदं न स्यात्स्याच्च व्य-**

---

'ह्रस्वं लघु' इति सूत्रितत्वात् ॥ नैष दोषः । इमे हि न समानाधिकरणे षष्ठ्यौ, किं तु व्यधिकरणे । तथा चाभ्यासावयवस्य लघोर्दीर्घ इत्यर्थः ॥ 'लघुनि चङ्परेऽनग्लोपे' इति सर्वमिहानुवर्तते ॥ तच्च प्राग्वदेव द्वेधा व्याख्येयं तदाह-**सन्वद्भावविषय इति** ॥ 'हलादेः' इति प्राचोक्तमिहोपेक्षितम्, निष्प्रमाणत्वात् । न हि मुनित्रयोक्तिं विना 'हलादेः' इति व्याख्यातुमुचितम् । न चैवमौन्दिददत् आट्टिटदित्यादौ दीर्घः स्यादिति शङ्क्यम् । अङ्गलघ्वोरुभयोरपि णिचं प्रति विशेष्यत्वे दीर्घस्य तत्राप्राप्तेः । चङ्परे हि यदङ्गम् उन्द इति न तदीयोऽभ्यासः, न वा चङ्परणिच्परं यल्लघु तत्परः ॥ एतेन आट्टिटदित्यादिभाष्योदाहरणमेव 'हलादेः' इति व्याख्याने प्रमाणमिति केषांचिदुत्प्रेक्षापि प्रत्युक्ता ॥ दीर्घाप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात् ॥ लघोः किम् 'क्ष्णु हिंसायाम्' । अचिक्ष्णवत् ॥ शास्त्रेऽस्मिन् 'कार्यकालं संज्ञापरिभाषम्' 'यथोद्देशं संज्ञापरिभाषम्' इति पक्षद्वयमप्यस्ति जातिव्यक्तिपक्षवत् । तथा च 'पूर्वोऽभ्यासः' इत्यस्य 'सन्वल्लघुनि' इत्यादिना सह पक्षद्वयेपि एकवाक्यता समानैव । तथापि 'कार्यकालपक्षे पदैकवाक्यता । यथोद्देशपक्षे तु वाक्यैकवाक्यता' इत्यस्ति विशेषः ॥ तत्रेदानीं कार्यकालपक्षपाति माधवमतं तावद्व्याचष्टे 'संज्ञायाः' इत्यादिना श्लोकद्वयेन । **अङ्गं यत्रेति** । अयं भावः । 'सन्वल्लघुनि,' 'दीर्घो लघोः' इति सूत्रद्वये अङ्गस्येत्यनुवर्तते । अभ्यासस्येति च । तेनाङ्गस्य ये द्वे तयोः पूर्वोऽभ्याससंज्ञकस्तस्येति फलितम् । 'द्वे' इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याह्रियते । तच्च कृदन्तं तद्योगादङ्गस्येति कर्मणि षष्ठी । तेन यत्राङ्गं द्विरुच्यते तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्तः इति । अचीकरत् । अपीपचत् ॥ युक्तं चैतत् । अङ्गस्येति षष्ठ्या कारकविभक्तित्वसंभवे तदुपेक्ष्य शेषषष्ठीत्वकल्पनाया अन्याय्यत्वात् ॥ **नाङ्गं द्विरुच्यते इति** । एवं चाचचकासत् । आर्तथपत् । और्णुनवद् इत्येव भवतीति भावः ॥ **अवयवः कश्चिदिति** । हलादेः प्रथमावयवो द्विरुच्यते अनादेस्तु द्वितीयावयव इत्यर्थः ॥ अङ्गं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ विधियमानौ एकाच्त्वे फलितौ । किं च । अस्मिन्पक्षे 'एकाचः' इत्यङ्गस्य विशेषणं शब्दतोपि सुलभम् 'एकाचो द्वे' इत्यधिकारादित्याशयेनाह-**तस्मादेकाश्चिवति** । स्यादेतत् । उक्तरीत्या ह्रस्वहलादिशेषचुत्वादीन्यपि अनेकाक्षु न स्युः । न चेष्टापत्तिः । दिद्रासति । दिदरिद्रासति जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इति चेत् ॥ तर्हि इहापि स एवोचितः । अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वाद् वृत्त्यादिषु स्वीकृतत्वाच्चेति अभिप्रेत्याह-**वस्तुत इति** ॥ **ऊर्णौ दीर्घ इति** । स्यादित्यपकृष्यते । और्णुनवत् इह सन्वद्भावस्तु नोपयुज्यते णौ कृतस्यादेशस्य स्थानिवद्भावेन निषेधेन वा नुशब्दस्य द्वित्वे सति अभ्यासे अवर्णाभावादिति भावः ॥ **अर्थापयताविति** । अर्थमाचष्टे इत्यर्थे णिच्यापुगागमे ततश्च च्लेश्चङि दीर्घस्य 'सन्वत्–' इतीत्वस्य च प्रवृत्तौ आर्तीथपदित्येव भवतीति भावः ॥ 'अर्थ उपयाच्ञायाम्' इत्यस्य तु चङ्परे णौ आर्तथतेति भवति, न तत्र दीर्घसन्वद्भावयोः प्रवृत्तिरिति चुरादौ स्फुटीभविष्यति ॥ **उभयमिति** । दीर्घः सन्वच्चेत्येतद्द्वयमित्यर्थः ॥ **न स्यात् स्याच्च व्यवस्थयेति** । 'चङ्परे णौ यल्लघु' इति व्याख्याने न स्यात् । 'चङ्परे णौ यदङ्गम्' इति व्याख्याने तु स्यात् । एवं च अचचकासत् । अचीचकासदिति व्याख्याभेदेन रूपद्वयमित्यर्थः ॥ ननु यथा चङ्परे णौ यल्लघ्विति व्याख्याने 'येन नाव्यवधान-' न्यायेन अपीपचदित्यादावेवे उभयं भवति न त्वनेकव्यवाये अचचकासदित्यादौ तथा न्यायसाम्येन 'लघुनि योऽभ्यासः' इत्यत्राप्येकेनैव व्यवायस्य स्वीकार्यत्वादचिक्ष्णवदित्यादौ 'सन्वत्' इतीत्वं न स्यादिति चेत् । अत्राहुः । 'अत्स्मृदृत्वर-' इतीत्वापवादेन अत्ववचनेन तुल्यजातीयापेक्षेण संयोगस्य व्यवधानेपि इत्त्वस्य ज्ञापितत्वान्नोक्तदोषः । अत एव 'दीर्घो लघो' इति सूत्रे 'लघोः' इति सार्थकम् ॥ माधवोपि 'जागृ धातौ' इत्यमेवाह। एवं च वदन् यथोद्देशपक्षमेवाशिश्रियत् ॥ तथा च ऊर्णुधातोः यत्तेनोक्तमौर्णुनवदित्यत्र 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घो न भवति 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासः' इति सूत्रार्थात् । अत्र तु अङ्गावयवस्याभ्यासो न त्वङ्गस्येत्यादि ॥ तत्र तस्यापि आग्रहो नास्तीति गम्यते ॥ अत एव चकास्तावचीचकासदित्युदाजहार ॥ तथा च मतभेदाभिप्रायेण पूर्वापरग्रन्थविरोधः समाधेय इति ॥ कातन्त्रपरिशिष्टे त्वित्वदीर्घयोः अजीजागरदित्युदाहृतम् ॥ तन्मतद्वयमप्यसम-

वस्थया । णेर्विशेष्यं सन्निहितं लघुनीत्यङ्गमेव वा ॥ ४ ॥ इति व्याख्याविकल्पस्य कैयटेनैव वर्णनात् । णेरग्लोपेऽपि सम्बन्धस्त्वगितामपि सिद्धये ॥ ५ ॥ अथ क्रम्यन्तास्त्रिंशत्परस्मैपदिनः ॥ अण १ रण २ वण ३ भण ४ मण ५ कण ६ क्वण ७ व्रण ८ भ्रण ९ ध्वण शब्दार्थाः । अणति । रणति । वणति । वकारादित्वादेत्त्वाभ्यासलोपौ न । ववणतुः । ववणिथ । १० ॥ धणिरपि कैश्चित्पठ्यते । धणति ॥ ओणृ अपनयने । ओणति । ओणाञ्चकार । ११ ॥ शोणृ वर्णगत्योः । शोणति । शुशोण । १२ ॥ श्रोणृ सङ्घाते । श्रोणति । १३ ॥ श्लोणृ च । शोणादयस्त्रयोऽमी तालव्योष्मादयः । १४ ॥ पैणृ गतिप्रेरणश्लेषणेषु । प्रैणृ इति क्वचित्पठ्यते । पिपैण । १५ ॥ ध्रण शब्दे । उपदेशे नान्तोयम् रषाभ्यामिति णत्वम् । ध्रणति । नोपदेशफलं यङ्लुकि, दन्ध्रन्ति । १६ । बणेत्यपि केचित् । बेणतुः बेणिथ । १७ ॥ कनी दीप्तिकान्तिगतिषु । चकान।१८॥ ष्टन वन शब्दे । स्तनति । १९ ॥ वनति । २० ॥ वन षण सम्भक्तौ । वनेरर्थभेदात्पुनः पाठः । सनति ससान सेनतुः ॥ ये विभाषा । ६ । ४ । ४३ ॥ जनसनखनामात्वं वा स्याद्यादौ क्ङिति । सायात् । सन्यात् । २१ ॥ अम गत्यादिषु । कनीदीप्तिकान्तिगतीत्यत्र गतेः परयोः शब्दसम्भक्त्योरादिशब्देन ग्रहः । अमति । आम । २२ ॥ द्रम हम्म मीमृ गतौ । द्रमति । दद्राम । ह्म्यन्तेति न वृद्धिः । अद्रमीत् । २३॥हम्मति । जहम्म।२४॥मीमति । मिमीम॥अयं शब्दे च।२५॥ चमु २६ छमु २७ जमु २८ झमु२९अदने ॥ ष्ठिवुक्लमुचमां शिति । ७ । ३ । ७५ ॥ एषामचो दीर्घः स्याच्छिति ॥ आङि चम इति वक्तव्यम् ॥ * ॥ आचामति । आङि किम् । चमति । विचमति । अचमीत् ॥ जिमिं केचित्पठन्ति । जेमति॥ क्रमु पादविक्षेपे ॥ वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ।३। १।७०॥ एभ्यः श्यन्वा स्यात्कर्त्रर्थे सार्वधातुके परे ॥ क्रमः परस्मैपदेषु । ७ । ३ । ७६ ॥ क्रमेर्दीर्घः स्यात्परस्मैपदे परे शिति । क्राम्यति । क्रामति । चक्राम । क्राम्यतु ।

---

वादुपेक्ष्यम् ॥ व्यवस्थामेव विवृणोति—**णेरिति** । संनिहितमिति हेतुगर्भविशेषणं 'लघुनि'इत्येतत् णेर्विशेष्यं भवति । संनिहितत्वादित्यर्थः ॥ **अङ्गमेवेति** । अस्य चङ्परे इत्यत्र आदेशरूपचङंशे आकाङ्क्षाभावेपि णाविति प्रत्ययांशे उत्थिताकाङ्क्षत्वादिति हेतुः स्पष्ट एवेति भावः॥ **कैयटेनैवेति** । तथा च एकं हरदत्तमतम्। अपरं तु, कैयटमतमिति विषयविभागेन व्याचक्षाणा उपेक्ष्या इति भावः ॥ चङ्पर इत्यावर्त्य अग्लोपविशेषणतयापि योजितम् । तस्य फलमाह । **णेरिति** । श्रिद्रुस्रुषु परतो अग्लोपित्वासंभवादिहापि 'चङ्परे' इत्येतावतैव णाविति लभ्यते इति बोध्यम् ॥ **अगितामपीति** । पचिकमिशाकिप्रभृतीनामित्यर्थः । नहीत्संज्ञकादौ लोपो णिचं प्रतीक्षत इति भावः ॥ **नोपदेशफलमिति** । अनुस्वार इत्यर्थः । **दंध्रन्तीति** । 'नुगतोनुनासिकान्तस्य' इत्यभ्यासस्य नुक् ॥ **गत्यादिष्विति** । गतिशब्दसंभक्तिष्वित्यर्थः ॥ **मीमृ** । ऋदित्फलं तु 'नाग्लोपि—' इति निषेधः । अमिमीमत् ॥ **ष्ठिवुक्लमु** । ष्ठीवति । क्लाम्यति ॥ **आङि चम इति** । 'ष्ठिवुक्लमुआचमाम्' इति वृत्तिकारोक्तपाठोऽयुक्त इति भावः ॥ **जिमिं केचिदिति** । तथा च जेमनमिति भोजने प्रयुज्यते ॥ **वा भ्राश** ॥ उभयत्रविभाषेयम् । अनवस्थानार्थो भ्रमिः, क्लमित्रसी च दिवादी ॥ तेभ्यो नित्यं प्राप्ते चारम्भात् ॥ भ्राश्टृ भ्लाशृ दीप्तौ । फणादावेतौ ॥ 'भ्रमु चलने' भ्वादिः ज्वलादिः फणादिरपि मनोरमायां पठ्यते, तद्भ्रमसादिति नव्याः ॥ 'भ्रमु अनवस्थाने' । दिवादिः पुषादिः शमादिः, तत्र भ्वादेः भ्रम्याति भ्रमति । शमादेस्तु श्यनि दीर्घे भ्राम्यतीति त्रैरूप्यम् । क्लमु ग्लानौ । त्रसी उद्वेगे । त्रुट छेदने । लष कान्तौ ॥ क्रमः॥ 'ष्ठिवुक्लमुचमाम्–' इत्यतोऽनुवर्तनादाह-**परस्मैपदे शितीति** । परस्मैपदे किम् । उपक्रमते । परा-

क्रामतु॥ **स्नुक्रमोरनात्मनेपदनिमित्ते** ।७।२।३६॥अत्रैवेट्। अक्रमीत्।३०॥अथ रेवत्यन्ता अनुदात्तेतः॥ अय १ वय २ पय ३ मय ४ चय ५ तय ६ णय ७ गतौ। अयते॥ **दयायासश्च** । ३ । १ । ३७ ॥ दय अय आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्रे। अयेताम् । अयिषीष्ट ॥**विभाषेटः** । ८ । ३। ७९॥इणः परो य इट् ततः परेषां षीध्वं-लुङ्लिटां धस्य वा मूर्धन्यः स्यात् । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट। आयिढ्वम्। आयिध्वम् ॥ **उपसर्गस्यायतौ** । ८ । २ । १९ ॥ अयतिपरस्योपसर्गस्य यो रेफ-स्तस्य लत्वं स्यात् । प्लायते । पलायते । निसूदुसोरुत्वस्यासिद्धत्वान्न लत्वम् । निर-यते। दुरयते।निर्दुरोस्तु निलयते । दुलयते । प्रत्यय इति त्विणो रूपम् । अथ कथमुद-यति विततोर्ध्वरश्मिरज्जाविति माघः।इटकिटकटी इत्यत्र प्रश्लिष्टस्य भविष्यति । यद्वा। अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् । चक्षिङो ङित्करणाज्ज्ञापकात् । वादित्वात् व-वये । पेये । मेये । चेये । तेये। प्रणयते । नेये॥दय दानगतिरक्षणहिंसादानेषु। आदानं ग्रहणम् । दयाञ्चक्रे । ८ ॥ रय गतौ । ९ ॥ ऊयी तन्तुसन्ताने । ऊयाञ्चक्रे । १० ॥ पूयी विशरणे दुर्गन्धे च । पूयते । पुपूये । ११ ॥ क्नूयी शब्दे उन्दे च । चुक्नूये । १२ ॥ क्ष्मायी विधूनने । चक्ष्माये । १३ ॥ स्फायी ओप्यायी वृद्धौ । स्फायते । प-स्फाये । १४ ॥ प्यायते ॥ **लिड्यङोश्च** । ६ । १ । २९ ॥ लिटि यङि च प्यायः पीभावः स्यात् । पुनःप्रसङ्गविज्ञानात्पीशब्दस्य द्वित्वम् । एरनेकाच इति यण् । पिप्ये पिप्याते । पिप्यिरे ॥ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्** । ३ । १ । ६१ ॥ एभ्यश्च्लेश्चिण्वा स्यादेकवचने तशब्दे परे ॥ **चिणो लुक्** । ६ । ४ । १०४ ॥ चिणः परस्य लुक् स्यात् । अप्यायि। अप्यायिष्ट । १५ ॥ तायृ सन्तानपा-लनयोः । सन्तानः प्रबन्धः । तायते । तताये । अतायि । अतायिष्ट। १६ ॥ शल च-लनसंवरणयोः। १७ ॥ वल वल्ल संवरणे संचरणे च । ववले । १८॥ ववल्ले । १९ ॥ मल मल्ल धारणे । मेले । २० ॥ ममल्ले । २१ ॥ भल भल्ल परिभाषणहिंसादानेषु । बभले। २२ । बभल्ले । २३ ।कल शब्दसंख्यानयोः।कलते। चकले॥२४॥ कल्ल अव्य-क्ते शब्दे । कल्लते । अशब्द इति स्वामी । अशब्दस्तूष्णीम्भाव इति च । २५ ॥ तेवृ देवृ देवने । तितेवे । २६ ॥ दिदेवे । २७ ॥ षेवृ २८ गेवृ २९ ग्लेवृ ३० पेवृ ३१ मेवृ ३२ म्लेवृ सेवने । परिनिविभ्य इति षत्वम् । परिषेवते । सिषेवे। अयं सोपदेशो-पीति न्यासकारादयः । तद्भाष्यविरुद्धम् । गेवते । जिगेवे । जिग्लेवे । पिपेवे। मेवते ।

---

क्रमते ॥ **स्नुक्रमोः** ॥ **अनात्मनेपदनिमित्ते इति** । आत्मनेपदानिमित्ताभावे इत्यर्थः॥ अन्ये तु द्विवचनस्थाने व्यत्य-येन एकवचनम् अनात्मनेपदनिमित्तयोरित्यर्थ इत्याहुः ॥ उभयोरपि भावकर्मकर्मव्यतिहारास्तङ्निमित्तं क्रमेस्तु वृत्तिसर्गा-दयोपीति बोध्यम् ॥ स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोयमित्याह–**अत्रैवेडिति** ॥ अनात्मनेपदेति किम् । उपस्नो-ष्यते जलेन । उपक्रंस्यते ॥ निमित्तइति किम् । स्नौतीति स्नविता स इवाचरति स्नवित्रीयते । इह क्यङ् आत्मनेपदनिमित्तं न तु स्नौतिरित्याहुः ॥ **लुङ्लिटां धस्येति** ॥ लिटि । लिलिहिढ्वे । लिलिहिध्वे ॥ **अथ कथमिति** । शानचा भाव्यमिति शङ्कितुराशयः ॥**क्नूयी शब्दे उन्दे च** ॥ उन्दः क्लेदनम् ॥ **लिड्यङोश्च** ॥ यङि पेपीयते ॥ **दीपजन**॥ दीपी दीप्तौ । जनी प्रादुर्भावे । बुध अवगमने । पूरी आप्यायने। एते दिवादयः ॥ **चिणो लुक्** ॥ **परस्य लुक्स्या-दिति** । तशब्दस्येति कैश्चित्पठ्यते । तदार्थिकार्थकथनम् । तशब्दे परतः चिणि विहिते चिणः परस्य जायमानो लुक् प्रत्ययस्य लुक्श्लुलुपः ' इति वचनात्तशब्दस्यैवेति स्पष्टत्वात् ॥ **अयमिति** । षेवृ धातुः ॥ **भाष्यविरुद्धमिति** ।

म्लेवते । ३३॥ शेवृ ३४खेवृ ३५ क्लेवृ इत्यप्येके ।३६॥ रेवृ प्लवगतौ । प्लवगतिः प्लुतगतिः । रेवते । ३७ ॥ अथावन्त्यन्ताः परस्मैपदिनः । मव्य बन्धने । ममव्य । १ ॥ सूर्क्ष्य २ ईर्क्ष्य ३ ईर्ष्य ईर्ष्यार्थाः । ४॥ हय गतौ । अहयीत् । यान्तत्वान्न वृद्धिः।५॥ शुच्य अभिषवे । अवयवानां शिथिलीकरणं सुरायाः सन्धानं वाऽभिषवः स्नानं च । शुशुच्य । ६ ॥ चुच्य इत्येके । ७ ॥ हर्य गतिकान्त्योः । जहर्य । ८ ॥ अल भूषणपर्याप्तिवारणेषु । अलति । आल ॥ **अतो ल्रान्तस्य** । ७ । २ । २ ॥ ल्रेति लुप्तषष्ठीकम् । अतः समीपौ यौ ल्रौ तदन्तस्याऽङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि। नेटीतिनिषेधस्यातोहलादेरिति विकल्पस्य चापवादः । मा भवानालीत् । अयं स्वरितेदित्येके । तन्मते अलते इत्याद्यपि।९॥ ञिफला विशरणे । तृफलेत्येरत्वम् । फेलतुः।

---

यदि सोपदेशः स्यात्तदास्त्यायतिरिवायमपि षोपदेशलक्षणे पर्युदस्येत तदकरणान्नास्ति सोपदेश इति भावः । **प्लवगताविति** । केचित् ‘ प्लव ’ इति धात्वन्तरमित्याहुः॥ तद्धि मनोरमायां दूषितम् । प्लवेति धात्वन्तरत्वे ‘ विभाषाङि रुप्लुवोः ’ इत्यत्र प्लुवः पक्षे घञ्विधानं व्यर्थं स्यात् ॥ प्लवेत्येतस्माद् घञि आप्लावशब्दस्य सिद्धत्वात् । तथा ‘ स्रवतिशृणोति ’ इति सूत्रेण प्लवतेरभ्यासोकारस्य इत्त्वविधानमपि व्यर्थं स्यात् । तद्धि पक्षे अपिप्लवदिति रूपसिद्धयर्थं क्रियते । तच्च रूपं प्लवधातोः ‘ सन्यतः ’ इत्यनेन सिद्धमिति किं तदुपादनेनेति ॥ **ममव्येति** । ‘ यस्य हलः ’ इति लोपस्तु न भवति यस्येति संघातग्रहणामिति सिद्धान्तितत्वात् । वर्णग्रहणे त्वर्थवद्ग्रहणपरिभाषाया अप्रवृत्त्या पुत्रकाम्येत्यादावपि लोपः स्यादिति दिक्॥ लुटि मव्यिता । आशिषि मव्यात् ‘ हलो यमाम् ’ इति धातुयकारस्य लोपः । **सूर्क्ष्य ईर्क्ष्य** । णलि । सुसूर्क्ष्य । ईर्क्ष्याचकार । ईर्ष्याचकार ॥ एभ्यः क्विपि ‘ लोपो व्योः ’ इति लोपे ‘ स्कोः ’ इति कलोपे जश्त्वचर्त्वयोः । सूर्ट् । ईर्ट् । संयोगान्तलोपस्त्विह न भवति ‘ रात्सस्य ’ इति नियमात् ‘ सूर्क्ष्य आदरे ’ इति वक्ष्यते । तस्यापि सूर्ट् इत्येव रूपम् ॥ **हय गतौ** । जहाय । हय्यात् ॥ **शिथिलीकरणमिति** । ‘ सोममभिषुणोति ’ इत्यादौ दर्शनात्॥ सुराया इति । तत्प्रकरणे ‘ संधानं स्यादभिषवः ’ इत्यमरोक्तेः ॥ **अतो ल्रान्तस्य** ॥ यद्यवयववचनेनान्तशब्देन बहुव्रीहिरङ्गं चान्य पदार्थः । तत्पक्षे विशेषणेन तदन्तविधेः सिद्धत्वादन्तग्रहणमनर्थकम् । अश्वल्लीदित्यत्रातिव्याप्तिश्च । समीपवाचिनाअन्तशब्देन षष्ठीसमासपक्षे रपिरणिशल्लप्रभृतिष्वतिव्याप्तिः , अङ्गस्यातः ल्रोः समीपत्वात् ल्रश्च तदन्तश्चेति समीपवाचिनान्तशब्देन कर्मधारयपक्षे त्वन्तशब्दस्य विशेषणत्वात् पूर्वनिपातः स्यादत आह—**लुप्तषष्ठीकमिति** ॥ अन्तशब्दः समीपवाचीत्यभिप्रेत्याह ।**अतः समीपाविति** । **अतो वृद्धिः स्यादिति** । इह ‘ अत ’ इत्यस्य तन्त्रावृत्त्यादिकं स्वीकर्तव्यम् । अन्यथा प्रयोजनाभावात् ‘ इक् ’ परिभाषानुपस्थानेपि ‘ अलोन्त्य ’ परिभाषया अन्त्यस्य स्यादिति भावः ॥ यद्यपि ‘ अतोल्रस्य ’ इत्युक्तेपि ‘ ल्रान्तस्याङ्गस्य अतः सिचि परे वृद्धिः ’ इत्यर्थे स्वीकृते ‘ येन नाव्यवधान—’ न्यायेनेष्टं सिध्यति । तथापि ‘ अङ्गस्य सिचि परे अतो वृद्धिः ’ इत्यर्थोपि प्रतीयेत । ततश्चाश्वल्लीदित्यत्रातिप्रसङ्गः स्यात् । तद्वारणाय सूत्रे अन्तग्रहणं कृतमिति ॥ तदनुरोधेनान्तशब्दस्य समीपवाचित्वमत इत्यस्य चानुवृत्तिः स्वीकृतेति बोध्यम् ॥ अतः समीपाविति किम् । अखोरीत् । अमीलीत् ॥ **ल्रान्तस्याङ्गस्य किम्** । ‘ श्वल्ल आशुगमने ’ । अश्वल्लीत् । अत्र अकारसमीपो यो लकारः स नाङ्गस्यान्तः, यस्त्वङ्गस्यान्तः स तु नाकारसमीपः ॥ ननु ‘ ल्र ’ इत्यस्य लुप्तषष्ठीकत्वाभ्युपगमेप्यन्तशब्दस्यावयववाचित्वं स्वीकृत्य ‘अङ्गस्यान्तं यत् ल्रं तस्यातः तत्समीपस्यातो वृद्धिः ’ इति व्याख्याने त्वत इत्यस्यावृत्तिर्नापेक्षितेति चेत् ॥ अत्राहुः । ‘ हलन्त्यम् ’ इति सूत्रे मनोरमायां ‘ सामीप्यं षष्ठ्यर्थः ’ इति पक्षस्य निराकरणात्तदनुरोधेनात्रात इत्यस्यावृत्तिराश्रितेति ॥ अत्र केचित् । ‘ अतो ल्लान्त—’ इति ल्लेति लुप्तसप्तमीकम् । अथवा ‘ अतो ल्लान्तः ’ इति व्यस्तमेव सूत्रयितुं शक्यम् । तथा च ‘ अङ्गस्यान्तं यद् ल्रं तस्मिन् परेऽव्यवहितस्यातो वृद्धिः ’ इति व्याख्यानसंभवान्न तन्त्रावृत्त्याद्याश्रयणक्लेशः । न चाङ्गस्य विशेष्यत्वेनैवान्वयो युज्यते, न तु विशेषणत्वेन ‘ पदाङ्गाधिकारे तस्य च तदन्तस्य ’ इति परिभाषायाः ‘ पदमङ्गं च विशेष्यं भवति ’ इत्यभिप्रायवर्णनादिति वाच्यम् । ‘ अल्लोपोनः ’ इति सूत्रे‘अङ्गावयवोऽसर्वनामस्थान—’ इत्येवं भाष्यकारादिभिर्विशेषणतया व्याख्यानात् क्वचिद्विशेषणत्वेप्यङ्गस्य न क्षतिरित्याहुः—**नेटीत्यादि** । यद्यपि ‘ पुरस्तादपवाद ’ न्यायेन ‘ नेटि ’ इत्यस्यापवादो न तु विकल्पस्यापि । तथापि बाध्यसामान्यचिन्तायां ‘ स्वविषये प्राप्तं सर्वं बाध्यते ’ इति ‘ पुरस्तादपवाद-

फेलुः अफालीत् ॥ १० ॥ मील ११ श्मील १२ स्मील१३ क्ष्मील निमेषणे । निमेषणं संकोचः । द्वितीयस्तालव्यादिः । तृतीयो दन्त्यादिः । १४ ॥ पील प्रतिष्टम्भे ।प्रतिष्टम्भो रोधनम् । १५ ॥ नील वर्णे । निनील । १६ ॥ शील समाधौ । शीलति ।१७॥ कील बन्धने । १८ ॥ कूल आवरणे । १९ ॥ शूल रुजायां सङ्घोषे च । २० ॥ तूल निष्कर्षे । निष्कर्षो निष्कोषणम् । तच्चान्तर्गतस्य बहिर्निःसारणम् । तुतूल । २१ ॥ पूल सङ्घाते । २२ ॥ मूल प्रतिष्ठायाम् । २३ ॥ फल निष्पत्तौ । फेलतुः । फेलुः । २४ ॥ चुल्ल भावकरणे । भावकरणमभिप्रायाविष्कारः । २५ ॥ फुल्ल विकसने । २६ ॥ चिल्ल शैथिल्ये भावकरणे च । २७ ॥ तिलगतौ । तेलति । २८ ॥ तिल्ले-त्येके । तिल्लति । २९ ॥ वेल्ल ३० चेल्ल ३१ केल्ल ३२ खेल्ल ३३ क्ष्वेल्ल ३४ वेल्ल चलने । पञ्च ऋदितः षष्ठो लोपधः । ३५ ॥ पेल्ल ३६ फेल्ल ३७ शेल्ल गतौ । ३८॥ षेल्ल इत्येके । ३९ ॥ स्खल सञ्चलने । चस्खाल । अस्खालीत् ४० ॥ खल सञ्चये । ४१ ॥ गल अदने । गलति । अगालीत् । ४२ ॥ षल गतौ । सलति । ४३ ॥ दल विशरणे । ४४ ॥ श्वल ४५ श्वल्ल आशुगमने । शश्वाल । अश्वालीत् । शश्वल्ल । अश्वल्लीत् । ४६ ॥ खोल ४७ खोर्ऋ गतिप्रतिघाते । खोलति । खोरति । ४८ ॥ धोर्ऋ गतिचातुर्ये । धोरति । ४९ ॥ त्सर छद्मगतौ । तत्सार । अत्सारीत् । ५० ॥ क्मर हूर्च्छने । चक्मार । ५१ ॥ अभ्र ५२ वभ्र ५३ मभ्र ५४ चर ५५ गत्यर्थाः । चरतिर्भक्षणेऽपि । अभ्रति । आनभ्र । मा भवानभ्रीत् । अङ्गान्त्यरेफस्यातः समीपत्वाभावान्न वृद्धिः । ष्ठिवु निरसने । ष्ठिवुक्लम्वितिदीर्घः । ष्ठीवति । अस्य द्वितीयस्थकारष्ठकारो वेति वृत्तिः । तिष्ठेव । तिष्ठिवतुः। तिष्ठिवुः । टिष्ठेव । टिष्ठिवतुः । टिष्ठिवुः । हलि चेति दीर्घः । ष्ठीव्यात् । ५६ ॥ जि जये । अयमजन्तेषु पठितुं युक्तः । जय उत्कर्षप्राप्तिः । अकर्मकोऽयम् । जयति ॥ **सन्लिटोर्जेः । ७ । ३ । ५७** ॥ जयतेः सन्लिण्निमित्तो योभ्यासस्ततः परस्य कुत्वं स्यात् । जिगाय । जिग्यतुः । जिग्युः । जिगयिथ । जिगेथ । जिगाय।जिगय। जिग्यिव । जिग्यिम । जेता । जीयात् । अजैषीत् । ५७ ॥ जीव प्राणधारणे । जिजीव । ५८ ॥ पीव ५९ मीव ६० तीव ६१ णीव स्थौल्ये । पिपीव । मिमीव । तितीव। निनीव । ६२ । क्षीवु ६३ क्षेवु निरसने । ६४ ॥ उर्वी ६५ तुर्वी ६६ थुर्वी ६७ दुर्वी ६८ धुर्वी हिंसार्थाः । ऊर्वांचकार । उपधायां चेति दीर्घः । तुतूर्व । ६९ ॥ गुर्वी उद्यमने । गूर्वति । जुगूर्व । ७० ॥ मुर्वी बन्धने । ७१ ॥ पुर्व ७२ पर्व ७३ मर्व पूरणे । ७४ ॥ चर्व अदने । ७५ ॥ भर्व हिंसायाम् । ७६ ॥ कर्व ७७ खर्व ७८ गर्व

---

न्यायोत्र न प्रवर्तते ' इति भावः ॥ **मील** ॥ **संकोच इति** । नेत्रसंकोचे तु प्रचुरप्रयोगः ॥ **तिल गतौ** । ' तिल स्नेहने इति चुरादौ ॥ **दल विशरणे** । विशरणमवयवानां विभागः ॥ **धोर्ऋ** । धोरितकमश्वानां गमनविशेषः । निष्ठान्तात्संज्ञायां कन् ॥ **त्सर** । छद्मना कपटेन गतिः छद्मगतिः ॥ **क्मर हूर्च्छने**। हूर्च्छनं कौटिल्यम् ॥ **ष्ठिवु निरसने** । अस्य ल्युटि ष्ठेवनम् । ' ष्ठीवनाऽसृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ' इत्यत्र पृषोदरादित्वात्पक्षे दीर्घ ईकार इत्याहुः ॥ **सन्लिटोर्जेः** ॥ **सन्लिण्निमित्त इति** । यदि तु ' सनि लिटि च परे योभ्यासः' इति प्राचो व्याख्यानमाद्रियेत तदा ' येन नाव्यवधान ' न्यायेन प्रकृतिव्यवधानं सोढव्यमेव । परं तु यङ्लुगन्तात्सनि जेजयिषतीत्यत्र कुत्वं

दर्पे ।७९॥ अर्व ८० शर्व ८१ षर्व हिंसायाम् । आनर्व । शर्वति सर्वति ।८२। इवि व्याप्तौ । इन्वति । इन्वांचकार । ८३ ॥ पिवि ८४ मिवि ८५ णिवि सेचने । तृतीयो मूर्द्धन्योष्मादिरित्येके । सेवनइति तरंगिण्याम् । पिन्वति । पिपिन्व । ८६ ॥ हिवि ८७ दिवि ८८ धिवि ८९ जिवि प्रीणनार्थाः । हिन्वति । दिन्वति ॥ **धिन्विकृण्व्योर च । ३ । १ । ८७ ॥** अनयोरकारोन्तादेशः स्यादुप्रत्ययश्च शब्विषये । अतो लोपः तस्य स्थानिवद्भावाल्लघूपधगुणो न । उप्रत्ययस्य पित्सु गुणः । धिनोति । धिनुतः । धिन्वन्ति ॥ **लोपश्चास्याऽन्यतरस्यांम्वोः । ६ । ४ । १०७ ॥** असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तस्यांगस्य लोपो वास्यान्म्वोःपरयोः । धिन्वः । धिनुवः । धिन्मः । धिनुमः । मिपितु परत्वाद्गुणः । धिनोमि ॥ **उतश्च प्रत्ययादसंयोगपूर्वात् । ६ । ४ । १०६ ॥** असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात् । धिनु । नित्यत्वादुकारलोपात्पूर्वमाट् । धिनवाव । धिनवाम । जिन्वति । इत्यादि।९०॥ रिवि ९१ रवि ९२ धवि गत्यर्थाः । रिण्वति । रण्वति धन्वति॥९३॥कृवि हिंसाकरणयोश्च । चकाराद्गतौ । कृणोति । ९४ । इत्यादि धिनोतिवत् । अयं स्वादौ च ॥ मव बन्धने।मवति।मेवतुः। मेवुः। अमवीत् । अमावीत्९५॥अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनाक्रियेच्छादीप्त्यवास्त्यालिङ्गनहिंसादानभागवृद्धिषु।अवति। आव । मा भवानवीत् । ९६ ॥ धावु गतिशुद्ध्योः । स्वरितेत् । धावति । धावते । दधाव । दधावे ॥ ९७ ॥ अथोष्मान्ता आत्मनेपदिनः ॥ धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु । धुक्षते । दुधुक्षे । १ । धिक्षते । दिधिक्षे । २ ॥ वृक्ष वरणे । वृक्षते । ववृक्षे ३ ॥ शिक्ष विद्योपादाने । शिक्षते । ४ ॥ भिक्ष भिक्षायामलाभे लाभे च । भिक्षते । ५ ॥ क्लेश अव्यक्तायां वाचि । बाधनइति दुर्गः । क्लेशते । चिक्लेशे । ६ ॥ दक्ष वृद्धौ शीघ्रार्थे च । दक्षते । ददक्षे। ७ ॥ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे । ८ ॥ ईक्ष दर्शने । ईक्षांचक्रे । ९ ॥ ईष गतिहिंसा-

---

स्यात् । न च तन्माधवग्रन्थसंमतमिति भावः ॥ **धिन्विकृण्व्योर च** ॥ 'अलोन्त्यस्य' इति वकारस्याकारादेशः । चकारेण तु उप्रत्ययोनुकृष्यते । बोपदेवेन त्वनयोस्तनादित्वं स्वीकृतम् । तन्मते तु चकारं विनाप्युप्रत्ययलाभः ॥ **अतो लोप** इति । यद्यपि उपदेशेऽदन्तत्वं नास्ति । तथाप्यार्द्धधातुकोपदेशे तदस्त्येव 'धिन्विकृण्व्योर च' इति श्रुतत्वाद् अकारादेशे कृते चानुकृष्टस्य पश्चाज्जायमानत्वादिति भावः ॥ **लोपश्च** ॥ **यः प्रत्ययोकार इति** । असंयोगपूर्वो यः प्रत्यय इति प्रत्ययविशेषणं तु न कृतम् । अक्ष्णुवः अक्ष्णुम इत्यादावनिष्टाभावेपि अश्नुवहे इत्यादावतिप्रसङ्गात् । एवम् 'उतश्च' इति सूत्रेपि अक्ष्णुहीत्यत्र दोषाभावेपि अश्नुहीत्यत्रातिप्रसङ्गः स्यादिति 'असंयोगपूर्व' इति प्रत्ययविशेषणं न कृतमित्याहुः ॥ अश्नुहीति परस्मैपदं यद्यपि लोके दुर्लभं तथापि वेदाभिप्रायेण तत्प्रयोगस्य साधुत्वं बोध्यम् । आप्नुहीति । पाठस्तूचितः ॥ **कृवि । अयमिति** । कृणोतीत्यादिरित्यर्थः । स्वादौ हि कृवीत्ययं धातुः न पठ्यते, किं तु 'कृञ् हिंसायाम्' इति । तस्य च परस्मैपदेषु सार्वधातुके कृणोतीत्यादीनि रूपाणि तुल्यानीति फलितोर्थः ॥ **अव रक्षणे** । एकोनविंशतिरर्थाः । कान्तिः शोभा, दीप्तिस्तेज इत्याहुः, तृप्तिरिच्छानाशः । स्वाम्यर्थः स्वामित्वम् । हिंसा हननम् । आदानं ग्रहणम् । न चात्र दानमेवार्थोस्त्विति वाच्यम् । 'भागे वृद्धौ ग्रहे बंधे' इत्येवमर्थानां विशिष्य बोपदेवेन गणितत्वात् ॥ **भिक्ष** । याञ्चालाभालाभास्त्रयोऽर्थाः ॥ स्वामी तु 'क्लेशे व्यक्तायां वाचि च' इति पठित्वा इमावपि भिक्षधातोरर्थाविति मन्यते ॥ 'क्लिश उपतापे' इति दिवादौ । 'क्लिशू विबाधने' इति क्र्यादौ ॥ **दीक्ष** । पञ्चार्थाः ॥ **ईष गति** । 'गुरोश्च हलः' इत्यप्रत्यये टाप् । ईषा । मनस ईषा मनीषा । शकन्ध्वादिः । मनीषामभिनिविष्टं मनीषितम् । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति णिचि तदन्तात् क्तः । 'ईष उञ्छे' इति तु परस्मैपदिषु ॥ ह्रस्वादयस्त्रयः 'इष गतौ' दिवादिः । 'इष इच्छायाम्' तुदादिः । 'इष आभीक्ष्ण्ये' क्र्यादिः ॥

दर्शनेषु । ईषांचक्रे । १० ॥ भाष व्यक्तायां वाचि । भाषते । ११ ॥ वर्ष स्नेहने । दन्त्योष्ठ्यादिः ।ववर्षे।१२॥गेपृ अन्विच्छायाम् । ग्लेपृ इत्येके।अन्विच्छा अन्वेषणम् । जिगेषे । १३ ॥ पेषृ प्रयत्ने । पेषते । १४ ॥ जेषृ १५ ॥ णेषृ १६ एषृ १७ प्रेषृ गतौ ॥ जेषते । नेषते । एषाञ्चक्रे । पिप्रेषे । १८ ॥ रेषृ १९ हेषृ २० ह्रेषृ अव्यक्ते शब्दे । आद्यो वृकशब्दे । ततो द्वौ अश्वशब्दे । रेषते । हेषते । ह्रेषते ॥ २१ ॥ कासृ शब्दकुत्सायाम् । कासाञ्चक्रे । २२ ॥ भासृ दीप्तौ । बभासे । २३ ॥णासृ २४ रासृ शब्दे । नासते । प्रणासते । २५ ॥ णस कौटिल्ये । नसते । २६ ॥ भ्यस भये। भ्यसते । बभ्यसे । २७ ॥ आङः शसि इच्छायाम् ॥ आशंसते । आशशंसे । २८ ॥ ग्रसु २९ ग्लसु अदने । जग्रसे । जग्लसे । ३० ॥ ईह चेष्टायाम् । ईहाञ्चक्रे । ३१ ॥ बहि ३२ महि वृद्धौ । बंहते । बबंहे । मंहते । ३३ ॥ अहि गतौ । अंहते आनंहे । ३४ ॥ गर्ह ३५ गल्ह कुत्सायाम् । जगर्हे । जगल्हे । ३६ ॥ बर्ह ३७ बल्ह प्राधान्ये । ओष्ठ्यादी । ३८ वर्ह॥३९ वल्ह परिभाषणहिंसाच्छादनेषु । दन्त्योष्ठ्यादी । केचित्तु पूर्वयोर्दन्त्योष्ठ्यादितां चाहुः ।४०॥प्लिह गतौ । पिप्लिहे । ४१ ॥ वेहृ ४२ जेहृ ४३ बाहृ प्रयत्ने । आद्यो दन्तोष्ठ्यादिः । अन्त्यः केवलोष्ठ्यादिः।उभावप्योष्ठ्यादी इत्येके । दन्त्योष्ठ्यादी इत्यपरे । जेहतिर्गत्यर्थोऽपि । ववाहे । ४४ ॥ द्राहृ निद्राक्षये । निक्षेपे इत्येके । ४५ ॥ काशृ दीप्तौ।चकाशे।४६॥ऊह वितर्के । ऊहाञ्चक्रे।४७॥ गाहू विलोडने । गाहते । जगाहे । जगाहिषे । जघाक्षे । जगाहिढ्वे । जगाहिध्वे । जघाढ्वे ॥ ढो ढे लोपः । ८ । ३ । १३ ॥ ढस्य लोपः स्याड्ढे परे । गाहिता । गाढा। गाहिष्यते । घाक्ष्यते । गाहिषीष्ट ।घाक्षीष्ट।अगाहिष्ट । अगाढ। अघाक्षाताम्।अघाक्षत । अगाढाः । अघाढ्वम् । अघाक्षि । ४८ ॥ गृहू गर्हणे । गर्हते । जगृहे ॥ ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्व विप्रतिषेधेन ॥ * ॥ जगृहिषे । जघृक्षे । जघृढ्वे । गर्हिता ।

---

कासांचक्रेइति । 'कास्प्रत्यया-' इत्याम् ॥ भासृ दीप्तौ । अस्य ऋदित्वं भ्राजतेरिव तङ्मात्रफलकम् । 'भ्राजभास' इत्यादिनोपधाह्रस्वस्य विकल्पितत्वात् ॥ णस कौटिल्ये । लिण्निमित्तादेशादित्वाभावादेत्वम् । नेसे ॥ आङः शसि । शंसु स्तुताविति तु परस्मैपदिषु वक्ष्यते ॥ ग्रसु ग्लसु । 'उदितो वा' इति क्त्वायां वेट् । ग्रसित्वा। ग्रस्त्वा । 'यस्य विभाषा' इति नेट् । ग्रस्तः ॥ वेहृ ॥ आद्य इति । वेहतेरति प्रत्यये वेहत्शब्दो निपातितः । पोटायुवतीति सूत्रे इति भावः ॥ वेहत् गर्भोपघातिनी ॥ अन्त्य इति । बाहुशब्दस्य भुजपर्यायस्य 'क्षुब्धस्वान्तध्वान्त-' इतिनिपातितस्य बाढशब्दस्य च निर्विवादत्वादिति भावः ॥ दन्त्योष्ठ्यादी । उभावपीत्यनुषज्यते । 'अनुदात्तेत्त्वकृतमात्मनेपदमनित्यम्' । तेन 'ववाह रक्तं पुरुषास्ततो जाताः सहस्रशः' इति सिद्धम् । न चात्रार्थासंगतिः, । धातूनामनेकार्थत्वात्स्रवणार्थकत्वे बाधकाभावादित्याहुः ॥ ऊह । कथं तर्हि 'अनुक्तमप्यूहति पण्डितो जनः' अत्राहुः । अनुदात्तेत्त्वलक्षणस्य तङोऽनित्यत्वान्न दोष इति ॥ गाहू । ऊदित्वादिड्वा । इडभावे ढत्वम् । 'एकाचः' इति भष्भावः। 'षढोः कः सि' इति कः । कात्परस्य षत्वम् । जघाक्षे ॥ 'विभाषेटः' इति वा मूर्धन्यः । जगाहिढ्वे । जगाहिध्वे । इडभावेतु भष्भावः ॥ ढो ढे लोपः ॥ जघाढ्वे ॥ ढे किम् । ऊढः । इह पूर्व ढलोपो माभूत् । कृते तु ढग्रहणे 'ष्टुना ष्टुः' इत्यस्य आश्रयात् सिद्धत्वं भवतीति सिद्धमिष्टमित्याहुः ॥ अगाढेति । 'झलो झलि' इति सलोपः । ढत्वधत्वष्टुत्वढलोपः । सिचो लोपात्पूर्वं भष्भावस्तु न, असिद्धत्वात् । भष्भावस्तु सिज्लोपानन्तरमपि न भवति सकारपरत्वाभावात् ॥ न च कृतेपि सलोपे प्रत्ययलक्षणेन सिच्परत्वाद्भष्भावो दुर्वार इति शङ्क्यम् । वर्णाश्रये प्रत्ययलक्षणाभावात् । अन्यथा गवे हितं गोहितमित्यत्रावादेशः स्यादिति दिक् ॥ जगृहे इति । कित्त्वात्परत्वात्पुगन्त इति गुणे प्राप्ते 'ऋदुप-

गर्ढा । गर्हिष्यते । घर्क्ष्यते । गर्हिषीष्ट । घृक्षीष्ट । लुङि । अगर्हिष्ट । इडभावे ॥ **शल इगुपधादनिटः क्सः । ३ । १ । ४५ ॥** इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अघृक्षत ॥ **क्सस्याचि । ७ । ३ । ७२ ॥** अजादौ तङि क्सस्य लोपः स्यात् । अलोन्त्यस्य । अघृक्षाताम् । अघृक्षन्त ॥ ४९ ॥ ग्लह च । ग्लहते ॥ ५० ॥ घुषि कान्तिकरणे । घुंषते । जुघुन्ते । केचिद्घुषेत्यदुपधंपठन्ति ॥ ५१ ॥ अथार्हत्यन्ताः परस्मैपदिनः । घुषिर् अविशब्दने । विशब्दनं प्रतिज्ञानं ततोऽन्यस्मिन्नर्थे इत्येके । शब्दे इत्यन्ये पेठुः । घोषति । जुघोष । घोषिता । इरित्वादङ् वा । अघुषत् । अघोषीत् ॥ १ ॥ अक्षू व्याप्तौ । **अक्षोऽन्यतरस्याम् । ३ । १ । ७५ ॥** अक्षो वा श्नुप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे । पक्षे शप् । अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति । अक्षति । अक्षतः । अक्षन्ति । आनक्ष । आनक्षिथ । आनष्ठ । अक्षिता । अष्टा । अक्षिष्यति । स्कोरिति कलोपः । षढोः कः सि । अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्यात् । उदित्त्वाद्वेट् । नेटि । मा भवानक्षीत् । अक्षिषुः । इडभावे तु मा भवानाक्षीत् । आष्टाम् । आक्षुः । २ ॥ तक्षू ३ त्वक्षू ४ तनूकरणे ॥ **तनूकरणे तक्षः । ३ । १ । ७६ ॥** श्नुः स्याद्वा शब्विषये । तक्ष्णोति । तक्षति काष्ठम् । ततक्षिथ । ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् । वाग्भिः सन्तक्षति । भर्त्सयतीत्यर्थः ॥ उक्ष सेचने । उक्षाञ्चकार ॥ ५ ॥ रक्ष पालने ॥ ६ ॥ णिक्ष चुम्बने । प्रणिक्षति ॥ ७ ॥ तृक्ष ८ स्तृक्ष ९ णक्ष गतौ । तृक्षति । स्तृक्षति । नक्षति ॥ १० ॥ वक्ष रोषे सङ्घाते इत्येके ॥ ११ ॥ मृक्ष १२ सङ्घाते ॥ म्रक्ष इत्येके ॥ १३ ॥ तक्ष त्वचने । त्वचनं संवरणं ग्रहणं च । पक्ष परिग्रह इत्येके ॥ १४ ॥ सूर्क्ष आदरे । सुसूर्क्ष । अनादर इति तु क्वाचित्कोपपाठः । अवज्ञावहेलनमसूर्क्षणमित्यमरः ॥ १५ ॥ काक्षि १६ वाक्षि १७ माक्षि काङ्क्षायाम् ॥ १८ ॥ द्राक्षि १९ ध्राक्षि २० ध्वाक्षि घोरवासिते च ॥ २१ ॥ चूष पाने । चुचूष ॥ २२ ॥ तूष तुष्टौ । २३ ॥ पूष वृद्धौ ॥ २४ ॥ मूष स्तेये । ॥ २५ ॥ लूष २६ रूष भूषायाम् । २७ ॥ शूष प्रसवे । प्रसवोऽभ्यनुज्ञानम् ।

---

धेभ्यः ' इति वार्तिकात्कित्त्वे गुणाभावः ॥ **शल इगुपधा** ॥ शल इति धातोर्विशेषणादन्तलाभः ॥ शल इति किम् । अतिप्त । इगिति किम् । अगाढ ॥ अनिटः किम् । औहिष्ट ॥ **क्सस्याचि** ॥ **अजादाविति** । अङ्गाक्षिप्तप्रत्ययोत्र विशेष्यः । 'ताङि'इति तु केषांचित्प्रक्षेपस्तस्य काशिकादावनुक्तत्वादित्याहुः । अन्ये तु 'लुग्वा दुह–' इत्यतः ' आत्मनेपदे'इत्यपकर्षणात्तङीति लभ्यते । तेन ' दृशेः क्सः' इति वार्तिकोक्तक्सप्रत्ययस्य लोपो न भवति । सदृक्षाः अन्यादृक्षा इत्यत्रेत्याहुः ॥ **घुषि कान्तिकरणे** । लुङि । अघुंषिष्ट । अघुंषिषाताम् ॥ अदुपधपाठे तु । अघाषीत् । अघषीत् ॥ **अतक्षीदिति** । ' नेटि'इति वृद्धिनिषेधः । इडभावे तु अताक्षीत् ॥ **प्रणिक्षतीति** । ' उपसर्गादसमासेपि ' इति नित्यं णत्वम् । ' वा निंसनिक्षनिन्दाम्' इति तु कृद्विषयम् । ' ण्वुल्तृचौ' । प्रणिक्षकः । प्रनिक्षकः । प्रणिक्षिता । प्रनिक्षिता ॥ **अवज्ञेत्यादि** । ' सूर्क्षणमादरः ततोऽन्यदसूर्क्षणम्' इत्यमरग्रन्थार्थः ॥ यदि तु ' सूर्क्षणमनादरः' इति उच्यते । तर्हि 'असूर्क्षणमवज्ञापर्यायो न स्यात्'इति भावः ॥ **काक्षि** । काङ्क्षा इच्छा । **द्राक्षि ध्राक्षि ध्वाक्षि** । घोरवासितं घोरशब्दः ॥ वासृ शब्दे । ध्वाङ्क्षतीति ध्वाङ्क्षः काकः । द्राक्षिधातोः'गुरोश्च हलः' इति अप्रत्यये द्राक्षा । यवादिगणे निपातनान्नलोपः । द्राक्षामान् । इह मतोर्वत्वं तु न भवति 'अयवादिभ्यः' इत्युक्तेः ॥ **तूष तुष्टौ** । दिवादौ तु ह्रस्वोपधः । मूष

तालव्योष्मादिः ॥ २८ ॥ यूष हिंसायाम् । २९ ॥ जूष च । ३० ॥ भूष अलङ्कारे । भूषति । ३१ ॥ ऊष रुजायाम् । ऊषाञ्चकार । ३२ ॥ ईष उञ्छे । ३३ ॥ कष ३४ खष ३५ शिष ३६ जष ३७ झष ३८ शष ३९ वष ४० मष ४१ रुष ४२ रिष हिंसार्थाः । तृतीयषष्ठौ तालव्योष्मादी । सप्तमो दन्तोष्ठ्यादिः । चकाष । चखाष । शिशेष । शिशेषिथ । शेष्टा । क्सः । अशिक्षत् । अशेक्ष्यत् । जेषतुः । जझषतुः । शेषतुः । ववषतुः । मेषतुः ॥ **तीषसहलुभरुषरिषः । ७ । २ । ४८ ॥** इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । रोषिता । रोष्टा । रोषिष्यति । रेषिता । रेष्टा । रेषिष्यति ॥ ४३ ॥ भष भर्त्सने । इह भर्त्सनं श्वरवः । भषति । बभाष । ४४ ॥ उष दाहे । ओषति ॥ **उषविदजागृभ्योऽन्यतरस्याम् । ३ । १ । ३८ ॥** एभ्यो लिट्याम्वा स्यात् । ओषाञ्चकार । उवोष । ऊषतुः । उवोषिथ ॥ ४५ ॥ जिषु ४६ विषु ४७ मिषु सेचने । जिजेष । क्रादिनियमादिट् । विवेषिथ । विवेषिव । वेष्टा । वेक्ष्यति । अविक्षत् । ४८ ॥ पुष पुष्टौ । पोषति । पोषिता । पोषिष्यति । अपोषीत् । अनिट्केषु पुष्यति । श्यना निर्देशादयं सेट् । अतो न क्सः । अङ्विधौ दैवादिकस्य ग्रहणान्नाङ् । ४९ ॥ श्रिषु ५० श्लिषु ५१ प्रुषु ५२ प्लुषु दाहे । श्रेषति । शिश्रेष । श्रेषिता । श्लेषति । शिश्लेष । श्लेषिता । अयमपि सेट्, अनिट्सु दैवादिकस्यैव ग्रहणमिति कैयटादयः । यत्त्वनिट्कारिकान्यासे द्वयोर्ग्रहणमित्युक्तं तत्स्वोक्तिविरोधाद् ग्रन्थान्तरविरोधाच्चोपेक्ष्यम् । पुप्रोष । पुप्लोष । ५३ ॥ पृषु ५४ वृषु ५५ मृषु सेचने । मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च । पर्षति । पपर्ष । पृष्यात् । ५६ ॥ घृषु संघर्षे । ५७ ॥ हृषु अलीके । ५८ ॥ तुस ५९ ह्रस ६० ह्लस ६१ रस शब्दे । तुतोस । जह्रास । जह्लास । ररास । ६२ ॥ लस श्लेषणक्रीडनयोः । ६३ ॥ घस्लृ अदने । अयं न सार्वत्रिकः । लिट्यन्यतरस्यामित्यदेर्घस्लादेशविधानात् । ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः । अत्रैव पाठः शपि परस्मैपदे लिङ्गम् । लृदित्करणमङि । अनिट्कारिकासु पाठो वलाद्यार्धधातुके । क्मरचि तु विशिष्योपादानम् । घसति । घस्ता ॥ **सः स्यार्धधातुके । ७ । ४ । ४९ ॥** सस्य तः स्यात्सादावार्धधातुके । घत्स्यति । घसतु । अघसत् । घसेत् । लिङ्ग्याद्यभावादाशिष्यस्याप्रयोगः ॥ **पुषादिद्युताद्य्लृदितः परस्मैपदेषु । ३ । १ । ५५ ॥**

---

स्तेये । संज्ञायां क्वानि मूषकः । क्र्यादौ तु ह्रस्वोपधोऽयम् ॥ **भूष अलङ्कारे** । अयं चुरादावपि ॥ **ईष उञ्छे** । 'गुरोश्च हलः' इत्यप्रत्यये ईषा लाङ्गलदण्डः ॥ **कष खष** । षान्ते 'शिष' इत्ययमप्यनिट्कः' न तु रौधादिक एव । संकोचे मानाभावादित्यभिप्रेत्योदाहरति । शेष्टा । अशिक्षदित्यादि ॥ **तीषसह** ॥ इष इच्छायाम् । षह मर्षणे । लुभ गार्ध्ये । रुष रिष हिंसायाम् । एषिता । एष्टा । सहिता । सोढा । लोभिता । लोब्धा । **उवोषेति** । 'पुगन्त-' इति गुणः । 'अभ्यासस्यासवर्णे' इति उवङ् ॥ **घृषु संघर्षे** । ल्युटि घर्षणम् ॥ **घस्लृ अदने** । **अयमिति** । यद्ययं सार्वत्रिकः स्यात् । तदा लिट्यपि प्रयुज्येत ततश्च 'लिट्यन्यतरस्याम्' इति विकल्पेनादेशविधानं व्यर्थं भवेदिति भावः ॥ **अत्रैव पाठ इति** । भ्वादौ परस्मैपदे पाठ इत्यर्थः । **क्मरचीति** । 'सृघस्यदः क्मरच्' इति सूत्रे ॥ **सःस्यार्ध** ॥ 'सः, सि' इति च्छेदः ॥ सादौ किम् । घस्मरः ॥ आर्धधातुके इति किम् । वस्से ॥ **आशिषीति** । आशीर्लिङीत्यर्थः । एतच्च कर्तरि प्रयोगमभिप्रेत्योक्तम् । कर्मणि तु यग्विषये प्रयोगो नेति बोध्यम् ॥ **पुषादिद्युता** ॥

---

१—कर्तरीति । कर्मणि 'घत्सीष्ट' इत्यादौ वलाद्यार्धधातुकसत्त्वादस्यैव प्रयोगः । एवं कर्मव्यतिहारे कर्तर्यप्यस्यैव प्रयोग इति भावः ॥ यग्विषय इति चिणोऽप्युपलक्षणम् ॥ इति शब्दरत्नम् ॥

